नमोनमस्तुयोगीभवनिपार्वति॥७०॥नमस्तुसिद्धयस्तस्यत्व णिमाद्या पुरोगताः॥सर्वांलोकन्ना पिमनोनंदद्याद्योगिनांवरः॥७१॥सर्वदानक्रतु
भवंपुण्यंभवतियोगतः॥योगात्सकलकामासिर्नयोगाद्धुविप्राप्यते॥७२॥योगान्नत्हृदयग्रंथिर्नयोगान्ममतारिपुः॥नयोगसिद्धस्यमनो
हर्तुंकेनापिशक्यते॥७३॥सएवविमलोयोगीयश्चित्तंशिरसिस्थितं॥स्थिरीभूतव्ययं नित्यं दशमद्वारसंपुटे॥७४॥कर्णौपिधायमर्त्यस्यनाद
रूपंविचिन्वतः॥तदेवप्रणवस्याग्रंतदेवब्रह्मशाश्वतं॥७५॥तदेवानंतरूपाख्यंतदेवामृतमुत्तमं॥प्राणवायोप्रघोषोयंजठराग्निर्महत्पदं॥
पंचभूतविवासंयज्ज्ञानरूपमिदंपदं॥पदंप्राप्यविमुक्तिःस्याज्जन्मसंसारबंधनात्॥७७॥यदाप्तिर्दुर्लभालोकेयोगसिद्धिप्रदायका॥एवंब्र
ह्ममयंविभातिसकलंविश्वंचरस्थावरंविज्ञानाख्यमिदंपदंसभगवान्विष्णुःस्वयंव्यापकः॥ज्ञात्वातंशिरसिस्थितंबहुवरंयोगेश्वराणांप
रंप्राणीमुंचतिसर्पवज्जगतिजांनिर्मोकमायाकृतिं॥७८॥इतिश्री॰ज्ञानयोगक॰त्रिंशोध्यायः॥३०॥ ॥ईश्वरउ॰॥ ॥यदाचित्तामसंक
मंत्यक्त्वाकर्मसृज्जायते॥तदाज्ञानमयोयोगीजीवतांमोक्षदायकः॥१॥यदानिर्ममतादेहेयदाचित्तंसुनिर्मलं॥यदाहरौभक्तियोगस्तदा
बंधोनकर्मणा॥२॥कुर्वन्नेवहिकर्माणिमनःशांतंनृणांयदा॥तदायोगमयीसिद्धिर्जायतेनात्रसंशयः॥३॥गुरुत्वंस्थानमसकृद्दत्तुभूयम-
हामतिः॥जीवन्विष्णुत्वमासाद्यकर्मसंगात्प्रमुच्यते॥४॥कर्माणिनित्यजातानिनित्यनैमित्तिकानिच॥इच्छयानैवसेव्यानिदुःखतापवि
वृद्धये॥५॥कर्मपाशप्रशितारंचविष्णुंविद्धिमहेश्वरि॥तस्मिन्संतर्प्यसर्वाणिसंसारान्मुच्यतेखिलात्॥एतदेवपरंज्ञानमेतदेवपरंतपः॥एतदे

सनातनः॥ पृथ्वीपादतलाग्रेतुजलंसर्वगतंतथा ॥५४॥ तेजोवायुस्तथाकाशंविद्यतेभालमध्यगः॥ हस्तेचपंचतीर्थानिद-
क्षिणेना ऽत्रसंशयः॥ ५५॥ सूर्योयद्दक्षिणेनेत्रेचंद्रोवाममुदाहृतम् ॥ भौमश्चैवबुधश्चैवनासिकेद्वेउदाहृते ॥५६॥ गुरुश्चदक्षि
णेकर्णेवामकर्णेतथाभृगुः॥ मुखेशनैश्चरः प्रोक्तोगुदेराहुः प्रकीर्तितः॥ ५७॥ केतुरिंद्रियगः प्रोक्तोग्रहाः सर्वशरीरगाः॥ योगिनो-
देहमासाद्य भुवनानिचतुर्दश॥५८॥ प्रवर्ततेसदादेवितस्माद्योगंसदाभ्यसेत्॥ चातुर्मास्येविशेषेणयोगीपापंनिहंतिसि॥५९॥ मुहूर्तम
पियोयोगीमस्तकेधारयेन्मनः॥ कर्णौपिधायपापेभ्योमुच्यतेसोनसंशयः॥६०॥ अंतरंनैवपश्यामिविष्णोर्योगपरस्यवा॥ एकोपि
योगीयद्गेहेग्रासमात्रंभुनक्तिच ६१ कुलानित्रीणिसोवश्यंतारयेदात्मनासह॥ यदिविप्रोभवेद्योगीसोवश्यंदर्शनादपि॥६२॥ सर्वेषांप्राणि
नांदेविपापराशिनिषूदकः॥ सत्क्रियोब्रह्मनिरतः सच्छूद्रोयोगभाग्यदि॥६३॥ भवेत्सद्गुरुभक्तोवासोप्यमृतफलंलभेत्॥ योयोगीनि
यताहारः परब्रह्मसमाधिवान्॥६४॥ चातुर्मास्येविशेषेणहरौलयभाग्भवेत् यथारसेंद्ररसस्पर्शाल्लोहंभवतिकांचनं॥६५॥ तथामूर्तंह
रिंप्रीत्यामनुष्योलयमाव्रजेत्॥ यथामार्गजलंगंगापतितंत्रिदशैरपि॥६६॥ सेवितंसर्वफलदंतथायोगीविमुक्तिदः॥ यथागोमयमात्रे
णवन्हिर्दीप्यतिसर्वदा॥६७॥ देवतानांमुखंवन्हिर्कीर्त्यतेयाज्ञिकैःसदा॥ एवंयोगीसदाभ्यासात्जायतेमोक्षभाजनम्॥६८॥ योगोयंसे
व्यतेदेविज्ञानसिद्धिप्रदःसदा॥ सनकादिभिराचार्यैर्मुमुक्षुभिरधीश्वरैः॥६९॥ प्रथमंज्ञानसंपत्तिर्जायतेयोगिनांसदा॥ तेषांगृण्ही-

चा·मो·मा दुरुत्तो दीपार्चिरिवनिर्मलः॥२५॥मुहूर्तमात्रमपियोलयंचिंतयतिध्रुवम्॥तस्य पापसहस्राणिविलयंयांतितत्क्षणात्॥रागद्वेषौपरित्यज्यक्रो अ०
३२ धलोभविवर्जितः॥सर्वत्रसमदर्शीचविष्णुभक्तस्यदर्शनं। सर्वेषामपिजीवानांदयायस्यत्वदास्थिरा॥शौचाचारसमायुक्तोयोगीदुःखंनविंदति ३१
२८॥मायादिपटलैर्हीनोमिथ्यारविविरागवान्॥कुसंसर्गविहीनश्चयोगसिद्धेश्चलक्षणं॥ममतावन्हिसंयोगोनराणांतापदायकः॥उत्पन्नश्श
मनंतस्ययोगीनांशांतचारणं॥३०॥इंद्रियाणामथोत्पृत्थमनसैवनिषेधयेत्॥यथालोहेनलोहंचघोषितांतीक्ष्णतांव्रजेत्॥बुद्धिर्हिद्वि
धादेहाहेयाग्राह्याविशुद्धिदा॥संसारविषयात्याज्यापरब्रह्मणिसाशुभा॥३२॥अहंकारोयथादेविपापपुण्य प्रदायकः॥ज्ञानेतत्वेशुभफल
कृतोसंधायनान्यथा॥श्यामलंकंठपस्थंचरूपातीतान्नराशिवं॥हृदिस्थंशिरसिस्थंचहृयंबद्धविमुक्तये॥३४॥एतदक्षरमव्यक्तममृतंसक
लंतव॥रूपरूपविष्णुरूपरूपमूर्तीर्निवेदितं॥एवंज्ञात्वाविमुच्येतयोगीसंसारबंधनात्॥गुरूपदेशाद्गृहस्थोलभतेनान्यथाक्वचित्॥३६॥
यदागुरुःप्रसन्नात्मातस्यविश्वंप्रसीदति॥गुरुश्चतोषितोयेनसंतुष्टाःपितृदेवताः॥गुरूपदेशःप्रतिमासद्विचारःसमेमनः॥क्रियाचज्ञा
नासहितामोक्षसिद्धेर्हिलक्षणं॥३८॥क्रियापतिर्विष्णुरेवस्वयमेवहिनिष्क्रियः॥सचप्राणविरूपायद्वादशाक्षरबीजकः॥द्वादशाक्षर
कंचक्रंसर्वपापनिबर्हणं॥दुष्टानांदमनंचैवपरब्रह्मप्रदायकं॥४०॥एतदेवपरंब्रह्मद्वादशाक्षररूपधृक्॥मयाप्रकाशितंदेविस्कंदेहिवि
मलंतव॥४१॥एतत्सारंयोगिनांध्यानरूपंभक्तिग्राह्यंश्रद्धयाचिंतयेच्च॥चातुर्मास्येजन्मकोट्यांचजातंपापंदग्ध्वामुक्तिदःकैटभारिः ४२

2

वपरंश्रेयो यत्कृष्णोकर्मअर्पयेत् ७अयंहि निर्मलोयोगोनिर्गुणाःसउदाहृतः॥ताद्विष्णोःकर्मजनितंशुभत्वप्रतिपादनं॥तावद्भ्रमंतिसंसारेपित
रःपिंडतत्पराः॥यावत्कुले भक्तियुतःसुतोनैवप्रजायते॥९॥तावद्विजा निगर्जंतितावद्गर्जंतिपातकम्॥तावत्तीर्थान्यनेकानियावद्भक्तिंनविद
ति॥१०॥सएवज्ञानवाल्लोकेयोगिनांप्रथमोहिसः॥महाक्रतूनामाहर्ताहरिभक्तियुतोहिपः॥निमिषंनिर्नयन्मेषंयोगःसमभिजायते॥वाणी
जयेयोगिनस्तुगोमेधश्च प्रकीर्तितः॥१२॥मनसोविजयेनित्यमश्वमेधफलंलभेत्॥कल्पनाविजयान्नित्यंयज्ञंसौत्रामणिंलभेत्॥देहस्योत्स
र्जनान्नित्यंनरयज्ञः प्रकीर्तितः॥पंचेंद्रियपशून्हत्वानग्नौशीर्षेन्तुकुंडके॥१५॥गुरूपदेशविधिनाब्रह्मसूतत्वमश्नुते॥सयोगीनियताहारोदंड-
त्रितयधारकः॥त्रिदंडीस तुविज्ञेयोज्ञातेदेवेनिरंजनं॥मनोदंडःकर्मदंडोवाग्दंडोयस्ययोगिनः॥१६॥सयोगीब्रह्मरूपेणजीवन्नेवसमाप्यते॥अ
ज्ञानीबाध्यतेनित्यंकर्माभवबंधनात्मकैः॥कुर्वन्नेवाहिकर्माणिज्ञानीमुक्तिंप्रयातिहि॥यदाहिगुरूणांस्थानंब्रह्मणःप्रतिपादनं॥१८॥तदोवमुक्ति
माप्नोतिदेहस्तिष्ठतिकेवलं॥यावद्ब्रह्मफलावाप्तिंप्रयातिपुरुषोत्तमः॥तावत्कर्ममयीव्याप्तिर्ब्रह्मप्रक्षालनराभवेत्॥अवांतराणिसर्वाणिज्ञेया-
निमुनिभिःसदा॥२०॥मोक्षमार्गोद्विजश्रेष्ठश्रुतिस्मृतिसमुच्चयात्॥मोक्षोयंनगराकारश्चतुर्द्वारसमाकुलः॥द्वारपालास्तत्रनित्यंचत्वारस्तुस
मादयः॥तएवप्रथमंसेव्याःमनुजैर्मोक्षदायकाः॥२२॥समश्चहिसंचारश्चसंतोषःसाधुसंगमः॥एतेवैहस्तगायस्यतस्यसिद्धिर्नदूरतः॥योग
सिद्धिर्विष्णुभक्त्यासत्धर्माचरणेनच॥प्राप्यतेमनुजोदेविएतज्ज्ञानमलंविदुः॥ज्ञानार्थंच भ्रमन्मर्त्योविद्यास्थानेषुसर्वशः॥सद्योज्ञानंस

सूर्यः शिरोह्यमूर्तस्यमूर्तस्याऽपितथैवच ॥ ३९ ॥ उरस्तुपृथिवीलोकः पादश्चैवरसातलं ॥ अयंब्रह्मांडरूपेणमूर्तामूर्तस्वरूपकः ॥ ४० ॥ वि अ०
ष्णुरेवब्रह्मरूपोज्ञानयोगाश्रयः स्वयं ॥ सृजनेसर्वभूतानिपालयत्यपिसर्वशः ॥ ४१ ॥ विनाशयतिसर्वंहिसर्वदेवमयोह्ययं ॥ सर्वमासे ३०
ष्वाधिपत्यंयस्यविष्णोः सनातनं ॥ ४२ ॥ तस्मात्सर्वेषुमासेषुसर्वेषुदिवसेष्वपि ॥ सर्वेषुयामकालेषुसंस्मरन्मुच्यतेहरिं ॥ ४३ ॥ चातु
र्मास्येविशेषेणध्यानमात्रात्प्रमुच्यते ॥ अमूर्तसेवनंगंगातीर्थंध्यानाद्धरंपरं ॥ ४४ ॥ सर्वदानोत्तरंचैवचातुर्मास्येनसंशयः ॥ सर्वमा
सकृतंपापंचातुर्मास्येशुभाशुभम् ॥ ४५ ॥ अक्षय्यंतद्भवेद्देविनात्रकार्याविचारणा ॥ तस्मात्सर्वप्रयत्नेनज्ञानयोगोबहूत्तमः ॥ ४६
सेवितोविष्णुरूपेणब्रह्ममोक्षप्रदायकः ॥ शृणुष्वावहिताभूत्वामूर्तामूर्तस्थितिंशुभे ॥ ४७ ॥ नकथ्येयंयस्यकस्यकृतघ्नस्याप्य
वशस्यच ॥ अदत्तायाथदुष्टायचलचित्तायदांभिके ॥ ४८ ॥ स्ववाक्कृत्युतायनिंद्यायनवाच्यायोगजाकथा ॥ नित्यभक्तायदांताय
शमादिगुणिनेतथा ॥ ४९ ॥ विष्णुभक्तायदातव्याशूद्रायापिद्विजन्मने ॥ अभक्तायाप्यशुचयेब्रह्मस्थानंनकथ्यते ॥ ५० ॥ मद्भ
क्त्यायोगसिद्धिंत्वंगृहाणाशुतपोधन ॥ अमूर्तंज्ञानगम्यंतंविन्दुनारायणंपरम् ॥ ५१ ॥ नादरूपेणशिरसितिष्ठंतंसर्वदेहिनाम्
सएवजीवशिरसिवर्ततेसूर्यबिंबवत् ॥ ५२ ॥ सदोदितः सूक्ष्मरूपोमूर्तोमूर्त्याप्रणीयते ॥ अभ्यासेनसदादेविप्राप्यतेपरमात्म
कः ॥ ५३ ॥ शरीरेसकलादेवायोगिनोनिवसंतिहि ॥ कर्णेतुदक्षिणेनद्योनिवसंतितथापराः ॥ ५४ ॥ हृदयेईश्वरः शंभुर्नाभौब्र

समन्वितैः ॥ विनियोगेनसहितैश्छंदोभिः समलंकृतैः ॥ २४ ॥ ध्यानैर्जपैः पूजितैश्चभक्तानाम्मुनिसत्तम ॥ मोक्षोभवतिबंधेभ्यः
कर्मजेभ्योनसंशयः ॥ २५ ॥ अयंहिध्यानकर्माख्योयोगोदुःप्राप्यएवहि ॥ ध्यानयोगंपुनर्वक्ष्येशृणुष्वैकाग्रमानसा ॥ २६ ॥ ध्यान
योगेनपापानांक्षयोभवतिनान्यथा ॥ जपध्यानमयोयोगः कर्मयोगोनसंशयः ॥ २७ ॥ शब्दब्रह्मसमुद्भूतोवेदेनद्वादशाक्षरः ॥
ध्यानेनसर्वमाप्नोतिध्यानेनाप्नोतिशंभुताम् ॥ २८ ॥ ध्यानेनपरसंब्रह्ममूर्त्तौयोगस्तुध्यानजः ॥ सावलंबोध्यानयोगोयन्नाराय
णदर्शनं ॥ २९ ॥ द्वितीयोनिरवलंबोज्ञानयोगेनकीर्त्तितः ॥ अरूपमप्रमेयंयत्सर्वकायमहः सहा ॥ ३० ॥ तडित्कोटिसमप्रख्यं
सदोदितमखंडितम् ॥ निष्कलंसकलंवापिनिरंजनमयंवियत् ॥ ३१ ॥ तत्स्वरूपंभोगरूपंतुयातीतंमणोपमं ॥ विश्रांतकरणंमू
र्तमप्रकृतिस्थंचशाश्वतं ॥ ३२ ॥ दृश्यादृश्यमजंचैववैरजंसंततोज्ज्वलं ॥ बहुलंसर्वजंधर्म्यंनिर्विकल्पमनीश्वरं ॥ ३३ ॥ अगोत्रंव
र्णंवापिब्रह्मांडशतकारणम् ॥ निरीहंनिर्मनोबुद्धिशून्यंरूपंचनिर्जलं ॥ ३४ ॥ नमीशारूपंनिर्देहंनिर्द्वंद्वंसाक्षिमात्रकम् ॥ शुद्धस्फ
टिकसंकाशंध्यातव्ये यविवर्जितम् ॥ ३५ ॥ नोपमेयमगाधित्वंस्वीकुरुष्वस्वतेजसा ॥ पार्वत्यु० ॥ तत्कथंप्राप्यतेसम्यग्ज्ञानयोगि
स्वरूपिणा ॥ ३६ ॥ नारायणममूर्तंचेस्यानंतस्यवदप्रभो ॥ ईश्वरउ० ॥ शिरःप्रधानंगात्रेषुशिरसाधार्यतेमहान् ॥ ३७ ॥ शिरसा
पूजितोदेवःपूजितंसकलंजगत् ॥ शिरसाधार्यतेयोगः शिरसाध्रियतेबलं ॥ ३८ ॥ शिरसाध्रियतेतेजोजीवितंशिरसिस्थितम् ॥

उकारः पंचवर्णस्तु जलबीजः सनातनः ॥ मरीचिनासमायुक्तः पूजितः सर्वभोगदः ॥ ८ ॥ गकारो हेमरक्ताभो भरद्वाजसमन्वितः
वायुबीजविनिर्मुक्तः कुर्वतामादिभोगदः ॥ ९ ॥ वकारः कुंदधवलो व्योमबीजमहाबलः ॥ ऋषिमंत्रं पुरस्कृत्य योजितो मोक्षदायकः ॥
१० ॥ तेकारो विद्युदाकारो सामबीजं महत्स्मृतं ॥ अंगिरावह्निमूलं च वर्जितं कर्मकामिकं ॥ ११ ॥ वाकारो धूम्रवर्णश्च सूर्यबीजं मनोजवम् ॥
पुलरूपर्षिसमायुक्तो नियुक्तं सर्वसौख्यदम् ॥ १२ ॥ स्फुरद्रूपोक्षरो नित्यं जपाकुसुमभास्वरः ॥ मनोबीजं दुर्विषल्ह्यं पुलहाश्रितमर्थदं ॥ १३
देकाराक्षरकं बीजं हंसरूपं चकर्वरम् ॥ सिद्धिबीजं महासत्वं क्रतौ न्यस्तु नियोजितम् ॥ १४ ॥ वाकारो निर्मलो नित्यं यजमानस्तु बीजभृ
त् ॥ प्रचेताश्रियमाश्रित्य मोक्षे मोक्षप्रदायकं ॥ १५ ॥ यकारस्य महाबीजं पिंगवर्णश्च खेचरी ॥ भूचरी च महासिद्धिः सर्वदा सुवांचितं ॥
१६ ॥ भृगुयंत्रे समाश्रित्य नियोगे सर्वकर्मकृत् ॥ गायत्री छंद एतेषां देहन्यासक्रमो भवेत् ॥ १७ ॥ ओंकारं सर्वदा न्यसेन्नकारं पादयो-
र्द्वयोः ॥ मोकारं गुह्यदेशे तु भकारं नाभिपंकजे ॥ १८ ॥ गकारं हृदये न्यस्य वकारः कंठमध्यगः ॥ तेकारं दक्षिणे हस्ते वाकारो वामहस्त
गः ॥ १९ ॥ सुकारं मुखे जिह्वायां देकारः कर्णयोर्द्वयोः ॥ वाकार श्चक्षुषोर्द्वंद्वे यकारं मस्तके न्यसेत् ॥ २० ॥ लिंगमुद्रा योनिमुद्रा धेनुमुद्रा
तथात्रयं ॥ सकलं कृतमेतद्धि मंत्ररूपे बीजाक्षरं ॥ २१ ॥ योजयेत्सत्यहं देवि न स पापैः प्रलिप्यते ॥ एतद्द्वादशलिंगार कूर्मस्थं द्वादशाक्ष
रं ॥ २२ ॥ शालिग्रामशिलाश्च वद्द्वादशैव हि पूजिताः ॥ नाभिः सहाकैरेरेभिः प्रत्यक्षैः सहसं यदि ॥ २३ ॥ यथावर्णमनुध्यानैर्मुनिबीज

4



अ० ३०

प्रियोक्तिस्तेमहादुःखविनाशनः॥तंपूर्वंप्रणवंध्यात्वाज्ञानरूपंस्वरूपाश्रयम्॥५९॥ ज्ञात्वासर्वगतंब्रह्मदेहशोधनतत्परः॥
पद्मासनपरोभूत्वासंपूज्यज्ञानलोचनः॥६०॥नेत्रेसुकुडिलेकृत्वाकरौहृत्वातुसंहतौ॥चेतसिध्यानरूपेणचिंतयेच्छिवमंगल
म्॥६१॥तडित्कोटिप्रतीकाशंसूर्यकोटिसमच्छविं॥चंद्रलक्षसमच्छन्नंपुरुषंद्योतिताखिलम्॥६२॥मूर्त्तामूर्त्तविराजंतंसद-
रूपमव्ययम्॥चिंतयित्वाविराड्रूपंनभूयस्तनपोभवेत्॥चातुर्मास्येसकृदपिध्यानात्कल्मषसंक्षयः॥६३॥एवंचमद्रूपमि-
दंमुरारेरमोघवीर्यंशृणुतोऽप्यपारम्॥विलोकयेद्योऽघविनाशनायक्षणंप्रभक्तजन्मशतोद्भवाय॥६४॥ ॥इतिश्रीस्कंदपु
राणेब्रह्मनारदसंवादेचातुर्मास्यमाहात्म्येध्यानयोगोनामएकोनत्रिंशोऽध्यायः॥ २९॥ ॥पार्वत्युवाच॥ ॥ॐ
ध्यानयोगमहंप्राप्यज्ञानयोगमवाप्नुयाम्॥तथाकुरुष्वदेवेशयथाऽहममराभवे॥१॥ ॥ईश्वरउवाच॥ प्रत्यक्तोऽयं
मंत्रराजोद्वादशाक्षरसंज्ञितः॥जप्तव्यःसुकुमारांगिवेदसारःसनातनः॥२॥प्रणवःसर्ववेदाद्यःसर्वब्रह्मांडयाजकः॥प्रथमःस
र्वकार्येषुसर्वसिद्धिप्रदायकः॥३॥सितवर्णोमधुच्छंदऋषिर्ब्रह्मातुदेवता॥परमात्मातुगायत्रीनियोगःसर्वकर्मसु॥४॥
एतद्ब्रह्ममयंबीजंविश्वामित्रसमन्वितम्॥वेदवेदांगतत्त्वाख्यंसदसद्रूपमव्ययं॥५॥नकारःपीनवर्णस्तुजलबीजःसनातनः
बीजंपृथ्वीमनस्तुछंदोविषहाविनियोगतः॥६॥वकारःपार्थिवंबीजंविश्वामित्रसमन्वितं॥रक्तवर्णोमहातेजाधनदानेनयोजयेत्॥७

गवानीशोविररामप्रहृष्टवान्॥१३॥एतस्मिन्नंतरेशंभुर्गिरिजाश्रममभ्यगात्॥सर्वैर्भूतगणैर्युक्तोविमानेसार्वकामिके
॥१४॥तयावैभगवान्देवःपूजितःपरमेश्वरः॥सर्वेषामपिप्रत्यक्षमाश्चर्यंसमजायत॥१५॥स्तुत्वाऽथतंमहादेवंविष्णुर्दे
हेलयंययौ॥अथोवाचमहेशानःपार्वतींजगदीश्वरः॥१६॥विमानवरमारुह्यतुष्टाऽहंतवसुव्रते॥गत्वैकांतप्रदेशंतेकथ
येपरमंमहः॥१७॥एवमुक्त्वाभगवतींकरेगृह्यमुदान्वितः॥विमानवरमारोप्यलीलयाप्रययौतदा॥१८॥नानाधातुमयान
द्रीन्नानारत्नविचित्रितान्॥नदीनिर्झरकुंजांश्चनदान्कोकिलकूजितान्॥१९॥अरवानादेवखाताश्चगंगाद्याःसरितस्त
था॥सौगंधिकांश्चकल्हारान्सहस्रदलपंकजान्॥२०॥दर्शयन्कर्णिकारांश्चकोविदारांश्चमहाद्रुमान्॥तालान्तमालान्हिं-
तालान्प्रियंगून्पनसानपि॥२१॥तिलकान्बकुलांश्चैवबहूनपिचपुष्पितान्॥क्षेत्राणिकलनाभानिपिंजराण्यपिविदर्शयन्॥२२
ययौदेवनदीतीरेगतंशरवणंमहत्॥फुल्लकाशंस्वर्णमयंशरस्तंबगणान्वितम्॥२३॥हेमभूमिविभागस्थंवन्हिकांतिमृगांकज
म्॥तत्रतीरगतानांचमुनीनामूर्ध्वरेतसां॥२४॥आश्रमान्सविमानाग्रेतिष्ठन्पत्न्यैप्रदर्शयन्॥षट्कृत्तिकाश्चददृशेपार्वत्याव
नसन्निधौ॥स्नाताःस्वलंकृताश्चैवरूपवत्यस्तथाविरजांबराः॥ऊचुस्तांयोजितकराकेयंपुत्रायगम्यते॥२६॥तत्कथ्यतांमहाभागे
सचतेदर्शनंगतः॥२७॥पार्वत्युवाच॥ ममभाग्यवशात्पुत्रःकथमुत्संगमाहरेत्॥नह्यभाग्यवशात्पुंसांक्वापिसौख्यंनिरंत

क्षयोनहि॥१०॥ ॥इतिश्रीस्कंदपुराणेब्रह्मनारदसंवादेचातुर्मास्यमाहात्म्येपैजवनोपाख्यानेअष्टाविंशोऽध्यायः॥ २८॥
॥नारदउवाच॥ ॥कथंनित्याभगवतीहरपत्नीयशस्विनी॥योगसिद्धिंसमहतींप्रापमासचतुष्टये॥१॥मंत्रराजमिमंज
प्त्वाद्वादशाक्षरसंभवम्॥एतन्मेविस्तरेणत्वंकथयस्वयथातथम्॥२॥ ॥ब्रह्मोवाच॥ ॥चातुर्मास्येहरौसुप्तेपा-
र्वतीनियमव्रता॥मनसाकर्मणावाचाहरिभक्तिपरायणा॥ ३॥चारुशृंगेपितुर्नित्यंतिष्ठंतीतपसिस्थिता॥देवद्विजाग्निगोश्व
त्थातिथिपूजापरायणा॥४॥चातुर्मास्येऽथसंप्राप्तेविमलेहरिवासरे॥जजापपरमंमंत्रंयथादिष्टंपिनाकिना॥५॥शंखचक्रध
रोविष्णुश्चतुर्हस्तःकिरीटयुक्॥मेघश्यामोंबुजाक्षश्चसूर्यकोटिसमप्रभः॥६॥गरुडाधिष्ठितोत्कृष्टोहसन्व्याप्यजगत्त्रयम्॥श्रीवत्स
कौस्तुभयुतःपीतकौशेयवाससः॥७॥सर्वाभरणभासोभिरभिदीप्तमहावपुः॥बभाषेपार्वतींविष्णुःप्रसन्नवदनःशुभां॥
देवितुष्टोस्मिभद्रंतेकथयस्वमभीप्सितम्॥८॥ ॥पार्वत्युवाच॥ ॥तज्ज्ञानममलंदेहियेननावर्तनंभवेत्॥
इत्युक्तःसमहाविष्णुःप्रत्युवाचहरप्रियाम्॥९॥सएवदेवदेवेशस्तत्ववक्ष्यत्यसंशयम्॥सएवभगवान्साक्षीदेहांतरबहि
स्थितः॥१०॥विश्वस्रष्टाचगोप्ताचपवित्राणांचपावनः॥अनादिनिधनोधर्मोधर्मादीनांप्रभुर्हिसः॥११॥अक्षरस्त्रयसेव्यय
स्सकलंब्रह्मएवसः॥मूर्तामूर्तस्वरूपेणयोऽजोजन्मधरोहिसः॥१२॥ममाधिकारोनैवास्तिवक्तुंनववनसंशयः॥इत्युक्त्वाप्र

तम्॥अर्णवद्द्विगुणंतस्मादाज्यरूपंस्फनिर्मितम्॥४३॥परमं स्यादसंपूर्णंयत्रसिन्धुाःसमंततः॥तस्माच्चद्विगुणंद्वीपंशाल्मलीवृक्षसं
ज्ञितम्॥४४॥समुद्रोद्विगुणस्तत्रदधिमंडलसंप्रभः॥साध्यावसंतिनियतंमहत्तपसिसंस्थिताः॥४५॥ततोऽपिद्विगुणंद्वीपंप्लक्षनामें-
तिविश्रुतम्॥क्षीरोदोद्विगुणस्तत्रयत्रयत्रमहर्षयः॥४६॥षडिमानिस्फदिव्यानिभौमःस्वर्गउदाहृतः॥तत्रस्वर्णमयीभूमिस्तथारज
तसंयुता॥४७॥हृष्मामधुपलस्वादैःसर्वकामप्रदायका॥यत्रस्त्रीपुरुषाणांचकल्पदक्षाग्रहेस्थिताः॥४८॥वासांसिभूषणानांचसमू
हान्नृहर्षदंतिच॥एतानिदक्षचिन्हानिद्वीपानिमुनिसत्तम॥४९॥महेश्वरोविमानेनन्यातिकामाद्विहायसा॥प्लक्षद्वीपस्यचप्रांतेद्विगु
णःक्षीरसागरः॥५०॥तन्मध्येस्फमहद्द्वीपंश्वेतनामस्फनिश्चितम्॥रम्यकःपर्वतस्तत्रशतशृंगोपमद्रुमः॥५१तस्यशृंगेमहद्दिव्येवि
मानंस्थापितंतदा॥नदामृतफलैर्वृक्षैःसेवितेहेमवालुके॥५२॥क्षीरच्छेदेनविस्तृतेशिलातलस्फसंप्लुते॥विविक्तेसर्वस्फभूगेमणिस्त-
समन्विते॥५३॥उमायाःकथयामासदेवदेवःपिनाकधृक्॥कार्तिकेयोऽपिशुश्रावगुह्याद्गुह्यतरंमहत्॥५४॥ध्यानयोगंमंत्ररूप
द्वादशाक्षरसंज्ञितं॥प्रणवेनयुतंसाग्रंसरहस्यंशृणुतेःपरम्॥५५॥ ॥ईश्वरउवाच॥ ॥अक्षरत्रयसंयुक्तोमंत्रोयंसक
दक्षरः॥माघमासहितश्चायममायोविश्वपावनः॥५६॥विष्णुगम्योविष्णुमध्योमंत्रत्रयसमन्वितः॥तुरीयकलयाशेषब्रह्मांडग
णसेवितः॥५७॥निष्कामोमुनिभिःसेव्योमहाविद्यादिसेवितः॥नाभितःशिरसिव्याप्तअखंडस्फसुखदायकः॥५८॥ओंकारेति

मेतिरामेतिसमुदाहृतः॥४८॥ह्यक्षरोमंत्रराजोयंसर्वकार्यकरोभुवि॥देवाअपिप्रगायंतिरामनामगुणाकरम्॥४९॥तस्मात्त्वमपिदे
वेशिरामनामसदावद॥रामनामजपेद्योवैमुच्यतेसर्वकिल्बिषैः॥५०॥सहस्रनामजंपुण्यंरामनाम्नैवजायते॥चातुर्मास्येविशेषेणतत्पु-
ण्यंदशधोत्तरम्॥५१॥हीनजातिप्रजातानांमहद्दुस्त्यातिपातकम्॥शंसोद्ध्ययंविश्वमिदंसमग्रंस्वतेजसाव्याप्यजनांतरात्मना ॥पुनाति
जन्मांतरपातकानिस्थूलानिसूक्ष्माणिक्षणाद्धदग्ध्वा॥५३॥ ॥इतिश्रीस्कंदपुराणेब्रह्मनारदसंवादेचातुर्मास्यमाहात्म्येद्वादशा
क्षरमहिमावर्णनंनामचतुर्विंशोऽध्यायः॥ २४॥ ॥पार्वत्युवाच॥ ॥द्वादशाक्षरमाहात्म्यंममविस्तरतोवद॥यथाव
यत्फलंचयथाचक्रियतेमया॥१॥ ॥श्रीमहादेवउवाच॥ ॥द्विजातीनांसहोंकारःसहितोद्वादशाक्षरः॥स्त्रीशूद्राणां-
नमस्कारपूर्वकःसमुदाहृतः॥२॥प्रकृतीनांरामनामसमंतोवाषडक्षरः॥सोपिप्रणवहीनःस्यात्पुराणस्मृतिनिर्णयः॥३॥क्रमोऽयंसर्व
वर्णानांप्रकृतीनांसदैवहि॥क्रमेणरहितोयस्तुकरोतिमनुजोजपं॥४॥तस्य प्रकुप्यतिविष्णुर्नरकादिप्रदायकः॥ ॥पार्वत्युवाच॥
मयात्रिमात्रयास्वामिन्सेव्यतेजगदीश्वरः॥५॥रूपमस्यकथंजानेवचसामप्यगोचरं॥ ॥ईश्वरउवाच॥ ॥प्रणवस्याऽधि
कारोनतवा स्तिवरवर्णिनि॥नमोभगवतेवासुदेवायेतिजपःसदा॥६॥ ॥पार्वत्युवाच॥ ॥यदिसप्रणवंदद्याद्द्वादशा
क्षरचिंतनम्॥प्रणवेनाधिकारोमेकथंभवतिधूर्जटे॥७॥ ॥ईश्वरउवाच॥ ॥प्रणवःसर्वदेवानामादिरेषःप्रकीर्तितः॥ब्र

दिवसेनस्यद्वादशाहफलंलभेत् ॥द्वादशाक्षर माहात्म्यंवर्णितुंनैवशक्यते॥३२॥जिव्हासहस्रैरपिचब्रह्मणापिनपार्यते॥महामंत्रोत्ययं-
लोकेजप्योध्यानस्तुनरस्तथा॥३३॥पापहासर्वमासेषुचातुर्मास्येविशेषतः॥इदंरहस्यंवेदानांपुराणानामनेकशः॥३४॥स्मृतीनामपिस
र्वासांद्वादशाक्षरचिंतनम् ॥चिंतनादेवमर्त्यानांसिद्धिर्भवतिहीशिता॥३५॥पुण्यदानेनयाम्येनमुक्तिर्भवतिशाश्वती॥वर्णैस्तथाश्र
मैरेवप्रणवेनसमन्वितैः ३६॥जपैर्ध्यानैःशमपरैर्मोक्षंप्राप्येतनिश्चितम् ॥शूद्राणांचापिनारीणांप्रणवेनविवर्जितः॥३७॥प्रकृतीनां
चसर्वासांनमंत्रोद्वादशाक्षरः॥नजपोनतपःकार्यंकायक्लेशाद्विशुद्धिता॥३८॥विप्रभक्त्याचदानेनविष्णुध्यानेनसिध्यति॥तासांमं
त्रोरामनामध्येयःकोत्यधिकंभवेत्॥३९॥रामेतिद्व्यक्षरजपःसर्वपापापनोदकः॥गच्छन्तिष्ठन्शयानोवामनुजोरामकीर्तनात्॥४०
इहनिर्वर्ततोयातिप्रांतेहरिगणोभवेत् ॥रामेतिद्व्यक्षरोमंत्रोमंत्रकोटिशताधिकः॥४१॥सर्वासांप्रकृतीनांचकथितःपापनाशकः॥
चातुर्मास्येऽथसंप्राप्तेसोप्यनंतफलप्रदः॥४२॥चातुर्मास्येमहापुण्येलभ्यतेभक्तितत्परैः॥देववन्निष्फलंतेषांयमलोकस्यसेवनं॥४३
नरामादधिकंकिंचित्पठनंजगतीतले॥रामनामाश्रयायेवनतेषांयमयातना॥४४॥येचदोषाविघ्नकरामृतकाविग्रहाश्चये॥रामनाम्नै
वविलयंयांतिनात्रविचारणा॥४५॥रमतेसर्वभूतेषुस्थावरेषुचरेषुच॥अंतरात्मास्वरूपेणयच्चरामेतिकथ्यते॥४६॥रामेतिमंत्रराजोऽयंभयव्याधिनिषूदकः॥रणेविजयदश्चापिसर्वकार्यार्थसाधकः॥४७॥सर्वतीर्थफलप्रोक्तोविप्राणामपिकामदः॥रामचंद्रेतिरा

यास्त्वयंवैद्याग्गुणातीताचरत्तपः॥२५॥ पृथ्व्यंबुतेजोवायुश्चगगनंयन्मयंविदुः॥मूलप्रकृतिरूपायासाचकारोत्तमंतपः॥२६॥यास्था
वरंजंगममाशुविश्वंव्याप्यस्थितायाःप्रकृतेःपुरापि॥स्पृहादिरूपेणचतृप्तिदात्रीदेवेप्रसक्तेतपसापस्तुन्हिस्म्॥२७॥ ॥इतिश्रीस्कं
दपुराणेब्रह्मनारदसंवादेचातुर्मास्यमाहात्म्येपार्वतीतपोवर्णनंनामपंचविंशोऽध्यायः॥ २५॥ ॥गालवउवाच॥ ॥प्रवृ
त्तायांशैलपुत्र्यांमहत्तपसिदारुणे॥कंदर्पेणपराभूतोविचचारमहींहरः॥१॥ वृक्षच्छायासुतीर्थेषुनदीषुचनदेषुच॥जलेनसिंचन्
वपुःसर्वं त्रापिमहेश्वरः॥२॥तथेतिकामाकुलितोनलेभेशर्मकर्हिचित्॥एकदायमुनांदृष्ट्वाजलकल्लोलमालिनीम्॥३॥विगा
ह्मुमनश्चक्रेतापार्तिशमयन्निव॥कृष्णांबभूवतन्नीरंहरकायाग्निवह्निना॥४॥दग्धंविगाहनेनास्तुमषीप्रायंसदावभौ॥सापिदिव्य
वपुःपूर्वंश्यामाभूत्वाहरायतः॥५॥स्तुत्वानत्वामहेशानमुवाचपुनरेवसा॥प्रसादंकुरुदेवेशवशगाऽस्मिसदातव॥६॥ ॥ईश्व
रउवाच॥ ॥अस्मिन्तीर्थवरेपुण्येयःस्नास्यतिनरोभुवि॥तस्यपापसहस्राणियास्यंतिविलयंध्रुवम्॥७॥हरतीर्थमितिख्या
तंपुण्यंलोकेभविष्यति॥इत्युक्त्वातांप्रणम्याथतत्रैवांतरधीयत॥८॥तस्यास्तीरेमहेशोऽपिकृत्वारूपंमनोहरम्॥कामालयंवाद्य
हस्तंकृतपुंड्रंजटाधरम्॥९॥स्वेच्छयामुनिगेहेषुदर्शयत्स्वंगचापलम्॥क्वचिद्गायतिगीतानिक्वचिन्नृत्यतिच्छंदतः॥१०॥सचक्कुध्यति
हसतिस्त्रीणांमध्यगतःक्वचित्॥एवंविचरतस्तस्यऋषिपत्न्यःसमंततः॥११॥पत्युःशुश्रूषणंगेहकार्याण्यपित्वतत्क्षणात्॥तमे

ह्माविष्णुः शिवश्चैव वसंति दयितायुताः॥८॥ तत्र सर्वाणि मूलानि सर्वतीर्थानि भागशः॥ तिष्ठंति सर्वतीर्थानि कैवल्यं ब्रह्म एव च॥९॥
तस्य योग्या यदा देवा चरिष्यसि यदा तपः॥ चातुर्मास्ये हरिप्रीत्यै करिष्यसि शुभानने॥१०॥ तपसा प्राप्यते कामस्तपसा च महत्फलं॥ तप-
सा जायते सर्वं तत्तपः फलभं नरैः॥११॥ यशः सौभाग्यमतुलं क्षमा सत्यादयो गुणाः॥ फलं यं तपसा नित्यं तत्पश्चात्तुं न शक्यते॥१२॥ यदा
हि तपसा वृद्धिस्तदा भक्तिर्हरौ भवेत्॥ तदा हि तपसो हानिर्यदा भक्तिर्विना फलम्॥१३॥ तावत्तपांसि गर्जंति देहेऽस्मिन्सततं नृणाम्॥ य-
दा विष्णुं स्मरेन्नित्यं जिह्वाग्रं पावनं भवेत्॥१४॥ यथा प्रदीपे ज्वलिते प्रणश्यति महत्तमः॥ तथा हरेः कथायां च याति पापमनेकधा॥१५
तस्मात्सा वर्तिय यत्नेन हरौ संमेतपः कुरु॥ चातुर्मास्येऽथ संप्राप्ते प्रणवेन समन्वितं॥१६॥ विशुद्धेन हृदया मूला मंत्रराजमिमं जप॥ स
भगवांस्तक ष्टोद्वादशाक्षरसंयुतः॥१७॥ प्रदास्यति परं ज्ञानं ब्रह्मरूपमखंडितम्॥ ब्रह्मकल्पांतकोटीषु स्वपित्वं द्वादशाक्षरं॥१८॥
मंत्रराजं सप्रणवं ध्यायेत्सोऽपि न पश्यति॥ इत्युक्त्वा सा तपोनिष्ठा तपश्चरितुमागता॥१९॥ हिमाचलस्य शिखरे चातुर्मास्ये समागते॥
ब्रह्मचर्यव्रतपरा वसनत्र पर्संयुता॥२०॥ प्रातर्मध्येऽपराह्णे च ध्यायामि हरिशंकरम्॥ वपुर्यथा पुरा कृष्टे पूजने शंकरस्य च॥२१॥ सखी
जनसमायुक्ता पितुः शृंगे मनोहरे॥ अतपत्सा विशालाक्षी क्षमादिगुणसंयुता॥२३॥ ॥गालवउवाच॥ ॥याहि योगेश्वर-
री ध्येया या वंद्या विश्ववंदिता॥ जननी या च विश्वस्य सापि कामात पोगता॥२५॥ या हि प्रकृति सद्रूपा तडित्कोटिसमप्रभा॥ विरजा-

कास्तेष्वुपविष्टायावत्तत्रसमागताः॥२८॥तान्दृष्ट्वासहसात्रस्तःपुनरेवमहेश्वरः॥विप्रशापभयान्नष्टस्त्रिपुरारिर्दिवंययौ॥२९॥स्फु अ॰
रत्पिंगोच्चगोलोकेनांतुष्टावस्फुसंस्तुतः॥सृष्टिस्थितिविनाशानांकर्त्र्यैमात्रेनमोनमः॥३०॥यात्वंरसमयैर्भावैराप्याययतिभूतलम्॥देवा २५
नांचतथासंधान्पितॄणामपिवैगणान्॥३१॥सर्वैज्ञात्वारसाभिज्ञामधुरास्वाददायिनी॥त्वयाविश्वमिदंसर्वंबलस्नेहसमन्वितम्॥३२
त्वंमातासर्वरुद्राणांवसूनांदुहितातथा॥आदित्यानांस्वसाचैवतुष्टावांछितसिद्धिदा॥३३॥त्वंधृतिस्त्वंतथापुष्टिस्त्वंस्वाहात्वंस्वधात-
था॥ऋद्धिःसिद्धिस्तथालक्ष्मीर्धृतिःकीर्त्तिस्तथामतिः॥३४॥कांतिर्लज्जामहामायाश्रद्धासर्वार्थसाधिनी॥त्वयाविरहितंकिंचिन्ना
स्तित्रिभुवनेष्वपि॥३५॥वन्हेस्तृप्तिप्रदात्रीचदेवादीनांचतृप्तिदा॥त्वयासर्वमिदंव्याप्तंजगत्स्थावरजंगमं॥३६॥पादास्तेवेदाश्चत्वा-
रःसमुद्रास्तनतांययुः॥चंद्रार्कौलोचनेयस्यारोमाग्रेषुचदेवताः॥३७॥शृंगयोःपर्वताःसर्वेकर्णयोर्वायवस्तथा॥नाभौचैवामृतंदेवि
पातालानिखुरास्तथा॥३८॥स्कंधेचभगवान्ब्रह्मामस्तकस्थःसदाशिवः॥हृद्देशेच स्थितोविष्णुःपुच्छाग्रेपन्नगास्तथा॥३९॥श
कृत्स्थावसवःसर्वेसाध्यामूत्रस्थितास्तव॥सर्वेयज्ञात्यस्थिदेशेकिंनरासुत्यसंस्थिताः॥४०॥पितॄणांचगणाःसर्वेपुरस्थाभांतिसर्व
दा॥सर्वेयक्षाभालदेशेकिंन्नराश्चकपालयोः॥४१॥सर्वदेवमयीत्वंहिसर्वभूतविहद्धिदा॥सर्वलोकहितानित्यंममदेहहिताभव॥ ३५
४२॥प्रणतस्तवदेवेशिपूजयेत्त्वांसदाऽनघे॥स्तौमिविश्वार्तिहंत्रींत्वांप्रसन्नावरदाभव॥४३॥विप्रशापाग्निनादग्धंशरीरंममशो

वमनसाचक्रुर्भ्रांतिरूपेणमोहिता॥१२॥भर्मत्यश्चैवहास्यानिचक्रुस्ताअपियोषितः॥ततस्तस्मुनयोदृष्ट्वानासांदुःशीलभावनाम्॥१३
चुक्रुधुर्मुनयःसर्वेरूपंतस्यमनोहरम्॥गृह्यतांहन्यतामेषकोऽयंदुष्टउपागतः॥१४॥इतितेगृह्यकाष्ठानियद्दोषस्थंयमुक्तदा॥पला-
यितःसबहुधाभयात्तेषांमहात्मनाम्॥१५॥योजीवकलयाविश्वंप्राप्यतिष्ठतिदेहिनाम्॥नज्ञायतेनचप्राल्योनभेद्यश्चापिजाय
ते॥१६॥नशेकुस्तेयदासर्वेगृहीतुंतंमहेश्वरम्॥तदाशिवंप्रकुपिताःशेपुरित्थंद्विजातयः॥१७॥यस्माल्लिंगार्थमागत्यस्थाश्र
मांश्चोरवत्कृतम्॥परदारापहरणंतल्लिंगंपततांभुवि॥१८॥सद्यएवहिशापंस्वंदुष्टंप्राप्नुहितापस॥एवमुक्तेसशापाग्निर्वज्ररूप-
धरोमहान्॥तल्लिंगंधूर्जटेश्छित्वापातयामासभूतले॥रुधिरौघपरिव्याप्तोमुमोहभगवान्भुवि॥२०॥वेदनार्तोज्वलवपुर्महाशा
पाभिभूतधीः॥तंतथापतितंदृष्ट्वातआजग्मुर्महर्षयः॥२१ आकाशेसर्वभूतानित्रेसुर्विश्वंचचालह॥देवाश्चव्याकुलाजातासम्-
हामयमुपागताः॥२२॥ज्ञात्वाविप्राश्चमहेशानंपीडिताःहृदयेऽभवन्॥शक्रश्चतुर्मुखःशद्रुःखार्तादेवांहिबलवत्तरं॥२३॥किंकृतंभगवानं
षदेवैरपिससेव्यते॥साक्षीसर्वस्यजगतोऽस्माभिर्नोपलक्षितः॥२४॥वयंमूढधियःपापापरमज्ञानदुर्बलाः॥कथमस्माभि-
र्यस्यात्मास्मुतस्मननिवेदितः॥२५॥मयेदृशोगृहस्थायआत्मायंननिवेदितः॥निर्विकारोनिर्विषयोनिरीहोनिरुपद्रवः॥२६॥निर्म
मोनिरहंकारोयःशंभुर्नोपलक्षितः॥यस्यलोकाइमेसर्वेदेहांतिष्ठंतिमध्यगाः॥२७॥सएषजगतास्वामीहरोऽस्माभिर्नवीक्षितः॥इत्यु

10

चामृतेनस्नपनंनतेषांगर्भवेदना॥येकरिष्यंतिमधुनासेचनंलिंगमस्तके॥१०॥तेषांदुःखसहस्राणियास्यंतिविलयंध्रुवम्॥दीपदानं- अ०
कृतंयैर्न चातुर्मास्येशिवाग्रतः॥११॥कुलकोटिंसमुद्धृत्यस्वेच्छयाशिवलोकभाक्॥चंदनागरुधूपैश्चसुरभैश्चैनकुसुमैरपि॥१२॥नर्मदा २७
जललिंगंयेत्वर्चयिष्यंतितेशिवाः॥आवाहस्त्वमापन्नःप्राणिनामपिकाकथा॥१३॥तत्संभूतंमहालिंगंजलधारणसंयुतम्॥पूजयि
त्वाविधानेनचातुर्मास्येशिवोभवेत्॥१४॥चातुर्मास्येयेमनुजानर्मदामरकंटके॥तीर्थेस्नास्यंतिनियतास्तेषांवासस्त्रिविष्टपे॥१५॥
॥ब्रह्मोवाच॥ ॥इत्युक्त्वातेद्विजास्तत्रस्थाप्यलिंगंयथाविधि॥मरकंटकतीर्थेचनर्मदांचमहानदीं॥१६॥पुनश्चिंतापराजाता
विश्वस्यक्षोभकारणे॥पद्मासनगताभूत्वाप्राणायामपरायणाः॥१७॥चिंतयामासुरव्यग्रंहृदयस्थंमहेश्वरम्॥ततोदेवामहेंद्रा-
द्याःसंप्राप्यमरकंटकम्॥१८॥ब्राह्मणाश्चरक्तानिंचक्रुर्विनयानतकंधराः॥नमोस्तुवोद्विजातिभ्योब्रह्मविद्योमहेश्वराः॥१९॥भूसु
रेभ्योगुरुभ्यश्चविमुक्तेभ्यश्चबंधनात्॥यूयंगुणत्रयातीतागुणरूपागुणाकराः॥२०॥गुणत्रयमयैर्भावैःसततंप्राणबुद्बुदाः॥येषांवा
क्यजलेनैवपापिष्ठाअपिशुद्धिताः॥२१॥प्रयांतिपापपुंजाश्चभस्मसाद्यांतिपातिताः॥शस्त्रंलोहमयंयेषांवागेवतत्समन्विताः॥
२२॥पापैःपराभिभूतानांतेषांलोकोत्तरंबलम्॥क्षमयापृथिवीतुल्याःकोपेवैश्वानरप्रभाः॥२३॥पातनेऽनेकशक्तीनांसमर्थायूय
मेवहि॥स्वर्गादीनांतथायानेभवंतोगनयोध्रुवम्॥२४सत्कर्मकारकाश्चैवसत्कर्मनिरताःसदा॥सत्कर्मफलदातारःसत्कर्मभ्योमुमु- ३५



10

मने॥स्वतेजसापुनःकर्तुमहस्यमृतसंभवे॥४४॥इत्युक्त्वानांपरिक्रम्यतस्यादेहेलयंगतः॥सापिगर्भंदधाराथस्करभिस्तदनंतरम्
॥४५॥कालातिक्रमयोगेनसर्वंव्याकुलतांययौ॥तस्मिन्प्रनष्टेदेवेशेविप्रशापभयाद्द्रुते॥४६॥देवामहार्त्तिभययुश्चचालपृथिवीत-
था॥चंद्रार्कौनिष्प्रभौचैववायुरुच्चंडएवच॥४७॥समुद्राःक्षोभमगमंस्तस्मिन्कालेद्विजोत्तम॥४८॥यस्मिन्जगत्स्थावरजंगमाः
दिकंकालेलयंप्राप्यपुनःप्ररोहति॥यस्मिन्प्रनष्टेद्विजशापपीडितेजगन्नूनप्रायमवर्तनक्षणात्॥४९॥ ॥इतिश्रीस्कंदपुराणे
ब्रह्मनारदसंवादेचातुर्मास्यमाहात्म्येहरशापोनामषड्विंशोऽध्यायः॥२६॥ ॥गालवउवाच॥ ॥तस्मिंस्तत्पतिते-
लिंगेयोजनायामविस्तृते॥विषादार्ताऋषिगणास्तत्रजग्मुःसहस्रशः॥१॥व्यलोकयंतसर्वत्रदृष्टानत्रमहेश्वरम्॥नासौदृष्टिप
थेतेषांबभूवभयविह्वलः॥२॥वीर्यंवर्षसहस्रंचबहून्यपिसुसंचितम्॥पृथिवींसकलांव्याप्यास्थितंददृशिरेद्विजाः॥३॥तद्दृष्ट्वा
स्कमहल्लिंगंरुधिरात्तंजलेप्लुतम्॥ब्राह्मणाःसंशयंगतादह्यमानांवसुंधराम्॥४॥तल्लिंगंतत्रसंस्थाप्यचक्रुस्तांनर्मदांनदीम्॥तत्
जलंनर्मदारूपंतल्लिंगमरकंटकम्॥५॥नरकंवारयत्येतत्सेवितंनरकापहम्॥भूतग्रहाश्चसर्वेपियास्यंतिविलयंध्रुवम्॥६॥तत्र-
स्नात्वाजलंपीत्वासंतर्प्यचपितॄंस्तथा॥सर्वान्कामानवाप्नोतिमनुष्योभुविदुर्लभान्॥७॥लिंगानिनार्मदेयानिपूजयिष्यंतियेनराः
तेषांरुद्रमयोदेहोभविष्यतिनसंशयः॥८॥चातुर्मास्येविशेषेणलिंगपूजामहाफला॥चातुर्मास्येरुद्रजपंहरपूजाशिवेरतिः॥९॥पं

यं मैध्याचैवहिरण्यदा ॥४१॥ धनदाधर्मदाचैवनर्मदासकलप्रिया ॥ वामनालंबिकाकृष्णादीर्घशृंगासुपुच्छिका ॥४२॥ नारातरेयि अ० २७
कोशांतादुर्विष त्यामनोरमा ॥ सुनासादीर्घनासा चगौरागौरसुखीहया ॥४३॥ हरिद्वर्णानीलाचशंखिनीपंचवर्णका। विनताऽभिनता
चैवभिन्नवर्णासुपत्रिका ॥४४॥ जयाऽरुणाचकुंडोध्नीसुदंताचारुचंपिका ॥ एतासांमध्यगंनीलंदृष्ट्वातामुनिदेवताः ॥४५॥ विचरंति
सुरूपंतंसंजातंविस्मयन्मुखाः ॥ मुनीश्वराःकृपाविष्टाइद्वाद्याल्हृष्टमानसाः ॥४६॥ स्तुतिमारेभिरेकर्तुंतेजसातस्यतोषिताः ॥ भू
द्गुवाच ॥ ॥ कथंनीलितिनामासौजातोऽयमद्भुताकृतिः ॥४७॥ किमस्तकवन्प्रसन्नास्तेब्राह्मणाविश्व कारणम् ॥ गालवउ-
वाच ॥ लोहितोयस्तुवर्णेनमुखेपुच्छेचपांडुरः ॥ ४८॥ श्वेतःखुरविषाणेषुसनीलोवृषभःस्मृतः ॥ चतुष्पादोधर्मरूपोनीललोहित
चिन्हकः ॥४९॥ कपिलःखुरचिन्हेषुसनीलोवृषभःस्मृतः ॥ योसौमहेश्वरोदेवोवृषश्चाऽपिसएवहि ॥५०॥ चतुष्पादोधर्मरूपोनीलःप-
चमुखोहरः ॥ यस्यसंदर्शनादेववाजपेयफलंलभेत् ॥५१॥ नीलेचपूजितेयस्मिन्पूजितंसकलंजगत् ॥ स्निग्धग्रासप्रदानेनजग
दाप्यायितंभवेत् ॥५२॥ यस्यदेहःसदाश्रीमान्विश्वव्यापीजनार्दनः ॥ नित्यमर्चयतीयोसौवेदमंत्रैःसनातनैः ॥५३॥ ॥ ऋषय
ऊचुः ॥ ॥ त्वंदेवःसर्वगोभूर्णाविश्वगोप्तासनातनः ॥ विघ्नहर्त्ताज्ञानदश्चधर्मरूपश्चमोक्षदः ॥५४॥ त्वमेवधनदःश्रीदःसर्वव्या
धिनिषूदनः ॥ जगतांशर्मकरणेप्रवृत्तःकनकप्रदः ॥५५॥ तेजसांधामसर्वेषांसौरभेयमहाबल । शृंगाग्रेधृतकैलासपार्वतीसहितस्त २८



11

क्षव॥२५॥ सावित्रीमंत्रनिरतायेभवंतोऽघनाशना॥आत्मानंयजमानंचतारयंतिनसंशयः॥२६॥ वन्हयश्चतथाविप्रास्तर्पिताः
कार्यसाधकाः॥चातुर्मास्येविशेषेणतेषांपूजामहाफला॥२७॥ कोपिताःसर्वदेहस्यनाशनायभवंतिहि॥तावन्नवज्रमिंद्रस्यभू-
लंचैवपिनाकिनः॥२८॥दंडोयमस्यतावन्नोयावच्छापोद्विजोद्भवः॥अग्निनाज्वाल्यतेदृश्यंशापोद्दिष्टानपिस्वयम्॥२९॥ हंतिजानो
नजातांश्चतस्माद्विप्रंनकोपयेत्॥विप्रकोपाग्निनादग्धोनरकान्नेवमुच्यते॥शस्त्रक्षतोऽपिनरकान्मुच्यतेनात्रसंशयः॥देवानांमृधु
धान्यानांसामर्थ्यंभेदनेनहि॥३१॥ वाङ्मात्रेणाहिविप्रस्यविध्नेसकलंजगत्॥ तेयूयंगुरवोऽस्माकंविश्वकारणकारकाः॥३२॥प्रसी
दपरमानित्यंभवंतुभुवनेश्वराः॥ईश्वरेणविनासर्वेवयंलोकाश्चदुःखिताः॥३३॥तत्कथ्यतांसभगवान्क्कुत्रास्तेपरमेश्वरः॥ गा
लवउवाच॥ ॥ज्ञात्वामुनिभयत्रस्तं देवेशंशूलपाणिनं॥३४॥ सुरभीगर्भसंभूतंदेवानुत्तुर्महर्षयः॥स्वागतंदेवदेवेभ्योज्ञातो
वैसमहेश्वरः॥३५॥ तत्रगच्छंतुदेवेशायत्रदेवःसनातनः॥ इत्युक्त्वातेमहात्मानःसहदेवैर्ययुस्तदा॥३६॥गोलोकंदेवमार्गेणयत्र
पायसकर्दमाः॥घृतनद्योमधुन्हृदानदीनांयत्रसंघशः॥३७॥ पूर्वजानांगणाःसर्वेदधिपीयूषपाणयः॥मरीचिपासोमपाश्चसिद्ध
संघास्तथापरे॥३८॥ घृतपाश्चैवसाध्याश्चयत्रदेवाःसनातनाः॥तेतत्रगत्वामुनयोददृशुःसुरभीसुतम्॥३९॥ तेजसाभास्करंचैव-
ल्लनामेतिविश्रुतम्॥ इतस्ततोऽभिधावंतंगवांसंघांतमध्यगम्॥४०॥ नंदासुमनसाचैवसुरूपाचसुशीलका॥कामिनीनंदिनीचं-

यंसास पैतंदृष्ट्वानीलंमहाबृषम्॥७२॥स्वल्पक्रोधसमाविष्टोह्रिजाश्मकुस्तमंकितं॥चक्रंचवामभागेषुशूलंपार्श्वेतुदक्षिणे॥७३॥उत्स अ०
सृज्यगर्वामध्येतंदेवैर्गोपितंतदा॥ततोदेवगणाःसर्वेमहर्षीणांगणाःपुनः॥स्वानिस्थानानितेजग्मुर्मुनयोवीतमत्सराः॥७४॥एव- २८
मृषीणांदयितासक्तःकामार्तचित्तोमुनिपुंगवानाम्॥शापंसमासाद्यशिवोऽपिभक्त्यारेवाजलेऽगात्सशिलामयत्वम्॥७५॥
इतिश्रीस्कंदपुराणेब्रह्मनारदसंवादेचातुर्मास्यमाहात्म्येपैजवनोपाख्यानेवृषस्फातिर्नामसप्तविंशोऽध्यायः॥२७॥ ॥
॥गालवउवाच॥ ॥इतितेकथितंसर्वंशालग्रामकथानकं॥महेश्वरस्यचोत्पत्तिर्यथालिंगत्वमापसः॥१॥तस्माद्धरंलिंग
रूपंशालग्राममगतंहरिम्॥येऽर्चयंतिनराभक्त्यानतेषांदुःखयातना॥२॥चातुर्मास्येसमायातेविशेषात्पूजयेच्चतौ॥अर्चितौयाव
भेदेनस्वर्गमोक्षप्रदायकौ॥३॥देवौहरिहरौभक्त्याविप्रवह्निगवांगतौ॥येर्चयंतिमहाशूद्रतेषांमोक्षप्रदोहरिः॥४॥वेदोक्तकारये-
त्कर्मपूर्तेष्टेवेदतत्परः॥पंचायतनपूजांचसत्यवादीत्यलोकतः॥५॥विवेकादिगुणैर्युक्तःसशूद्रोयातिसद्गतिम्॥ब्रह्मचर्यंतपोना
न्यद्द्वादशाक्षरचिंतनात्॥६॥मंत्रैर्विनाषोडशशोपचारैःकार्यास्यपूजानरकादिहंतुः॥नृथानथावैगिरिजापतेश्चकार्याहिसच्छू
द्रमहाघमंत्री॥७॥ ॥ब्रह्मोवाच॥ एवं कथयतोरेषोरजनीक्षयमाययौ॥सच्छूद्रोगालवश्चैववशिष्ठेश्चपरिवा-
रितः॥८॥सतेनपूजितोविप्रोययौशीघ्रंनिजाश्रमम्॥९॥यइमंशृणुयान्मर्त्योवाचयेत्पाठयेच्चवा॥श्लोकंवासर्वमपिचतस्यपुण्य ३७

व ॥५६॥ वेदकर्त्तावेदमयोवेदात्मावेदवित्तमः॥ वेदवेद्योवेदयानोवेदरूपोगुणाकरः ॥५७॥ गुणत्रयेभ्यो ऽपिपरोयथात्वंवेद
कस्तव ॥ वृषस्त्वंभगवान्देवयस्तंकर्यंकुरुतेत्वघम् ॥५८॥ वृषलःसतुविज्ञेयोरौरवादिषुपच्यते ॥ यदास्पृष्टःसतुनरोनरकादि
षुयातना ॥५९॥ सेव्यतेपापनिचयैर्निगाढप्रायबंधनैः॥ कृत्स्नामंचत्वृषाक्रांतंमहाभार समन्वितम् ॥६०॥ निर्दयायेप्रशोष्यंति-
मतिस्तेषांनशाश्वती॥ चतुर्भिःसहितंमर्त्याविवाहविधिनातुये ॥६१॥ विवाहंनीलरूपस्ययेकरिष्यंतिमानवाः॥ पितॄनुद्दिश्य
तेषांवैकुलेनैवास्तिनारकी॥६२॥ त्वंगतिःसर्वलोकानांत्वंपितापरमेश्वरः॥ त्वयाविनाजगत्सर्वंतत्क्षणादेवनश्यति ॥६३॥ परा
चैववतुपश्यंतीमध्यमाबैखरीतथा॥ चतुर्विधानांवचसामीश्वरंत्वांविदुर्बुधाः॥६४॥ चतुःशृंगंचतुष्पादंद्विशीर्षंसप्तहस्तकम् ॥ त्रि
धाबद्धंधर्ममयंत्वामेवहृषभंविदुः॥६५॥ तृप्तिदंसर्वभूतानांविश्वव्यापकमोजसा॥ ब्रह्मधर्ममयंनित्यंत्वामात्मानंविदुर्जनाः॥
६६॥ अच्छेद्यस्त्वमभेद्यस्त्वमप्रमेयोमहायशाः॥ अशोष्यस्त्वमदाह्यो ऽसिविदुःपौराणिकाजनाः॥६७॥ त्वदाधारमिदंसर्वंत्व-
दाधारमिदंजगत् ॥ त्वदाधाराश्चदेवाश्चत्वदाधारंतथा ऽमृतम् ॥६८॥ जीवरूपेणलोकांस्त्रीन्व्याप्यतिष्ठसिनित्यदा ॥ एवंससंस्तु
तोनीलोविप्रैस्तैःसोमपायिभिः॥६९॥ प्रसन्नवदनोभूत्वाविप्रान्प्रणतितत्परः॥ पुनरेववचःप्रोचुर्विप्राःकृतशिवागसः॥७०॥ वरं
दद्दुर्महेशस्यनीलरूपस्यधर्मतः॥ एकादशाहेप्रेतस्ययस्यनोत्सृज्यतेवृषः॥७१॥ प्रेतत्वंतस्यस्थिरंतस्यदत्तैःश्राद्धशतैरपि॥ पुनरेव

यंल्लोकेख्यातोभविष्यति॥५६॥अच्छेद्यः स्यान्नरतत्तुर्ज्ञानयोगस्यपारगः॥निर्मत्सरोऽपिनिर्द्वंद्वोनिराशोब्रह्मसेवकः॥५७॥ अ० ३१
जीवन्मुक्तश्चसर्वत्रलाक्षवनानिचतुर्दश॥इत्युक्तश्चमहेशानंप्रणमंश्चपुनःपुनः॥५८॥ महेश्वरेणसहितोमंदराचलमाय
यौ॥ ॥ब्रह्मोवाच॥ ॥कृत्वाप्रदक्षिणंदेवींस्कंदमालिंग्यसोऽगमत्॥५९॥ततःसापार्वतीलब्ध्वाप्राप्यज्ञानमनुत्तम-
म्॥एवंसापरमांसिद्धिंप्रणवस्यप्रभाजनम्॥६०॥संप्राप्यजगतांमाताद्वादशाक्षरजांबुना॥इमांमत्स्येंद्रनाथस्यचोत्पत्तिंयः
शृणोतिच॥६१॥चातुर्मास्येविशेषेणसोऽश्वमेधफलंलभेत्॥६२॥ ॥इतिश्रीस्कंदपुराणेब्रह्मनारदसंवादेचातुर्मास्यमा
हात्म्येमत्स्येंद्रनाथोत्पत्तिकथनंनामएकत्रिंशोऽध्यायः॥ ३१ ॥ ॥ब्रह्मोवाच॥ ॥कार्तिकेयश्चपार्वत्याप्राणेभ्य-
श्चापिवल्लभः॥संक्रीडतिसमीपस्थोनानाचेष्टाभिरुद्यतः॥१॥रक्तकांतिर्महातेजाःषण्मुखोद्भुतविक्रमः॥क्वचिद्धावतिचा
त्यर्थंक्वचिन्नृत्यतिस्वेच्छया॥२॥मातरंपितरंदृष्ट्वाविनयावनतःक्वचित्॥क्वचिच्चगंगापुलिनेसिकतालेपनाकृतिः॥३॥ग-
णैःसहविचिन्वानोविविधान्वनभूरुहान्॥एवंप्रक्रीडतस्तस्यदिवसाःपंचजज्ञिरे॥४॥ततोदेवामहेंद्राद्यातारकाद्भयवि
द्रुताः॥महेशानंस्तुवन्सर्वेतारकस्यजिघांसया॥५॥चक्रुस्तेदेवसेनानांगंगांभसिगणैःसमं॥सस्वनुर्देववाद्यानिपुष्पवर्षेप
पातह॥६॥वह्निस्तुस्वांददौशक्तिंहिमवान्वाहनंददौ॥सर्वदेवसमुद्भूतगणकोटिसमावृतः॥७॥प्रणम्यमुनिसंघेभ्यःप्रययौ ४४



13

॥४२॥ ॥ब्रह्मोवाच॥ ॥एतस्मिन्नगरे तत्र क्षीरसागरमध्यतः॥ उज्जहार विमानाग्रे तेजोभाराभिपीडितः॥४३
॥उरोबाहुकृतिं कुर्वन् सान्निध्यं समुपागतः॥ महामत्स्यो ज्ञानपूर्वं सन्निधाने दंडकृतिः॥ ५४॥ हुंकारगर्भं मत्स्यं च दृष्ट्वा त-
स महेश्वरः॥ तेज सास्तंभयामास वाक्यमेतदुवाच ह॥ ४५॥ कस्त्वं मत्स्योदरस्थश्च देवो यक्षोथ मानुषः॥ कथं जीवसि देहा-
न्तं गतो मम वद प्रभो ॥ ४६॥ ॥मात्स्य उवाच॥ ॥अहं मत्स्योदरे क्षिप्तः समुद्रे क्षीरसंभवे ॥ मात्रा तु पितृवाक्येन ना
थं मम कुलान्वितः॥ ४७॥ कुलक्षयभयात्तेन जातं स्वकुलनाशनम् ॥ गंडांतयोगजनितो बालो न गृहकर्मकृत् ॥ ४८॥ इति
मात्रा दुःखितया निरस्तः शृणु वंशजः॥ झषेणापि गृहीतोऽस्मि कालोऽमेऽत्र महानभूत्॥ ४९॥ नववाक्यामृतैरभिज्ञो नयोगो
महानभूत् ॥ तेन त्वं सकलो ज्ञातो मया सूतोथ सूत्तगः॥ ५०॥ अनुज्ञां मम देवेश देहि निष्क्रमणाय च ॥ यथाऽहं पितृपो ब्रह्मनुभ
वान्याश्चोऽपि लक्ष्यते॥ ५१॥ ॥हर उवाच॥ ॥विप्राऽसि स्फूर्तरूपोऽसि पूज्योऽस्यासि च भाषतः॥ ॥बहिर्निष्क्रमवेगेन
स्तंभितोऽसि महाझषः॥ ५२॥ ततोऽसौ शिरसा जात उत्क्लेशान्मत्स्ययोजितः॥ ततोऽप्रकृतं वक्रं क्षणाद्बहिरुपागतः॥ ५३॥
रूपवान् प्रतिमायुक्तो मत्स्यगंधेन संयुतः॥ सोमकांतिसमं तत्र अभवद्दिव्यगंधभाक्॥ उमापि प्रणाता या सुंस्कृतं तत्संगभा
जनम् ॥ चकार तस्य नामापि हरः परमहर्षितः॥ ५५॥ यस्मान्मत्स्योदरज्जातो योगिनो प्रवरोत्ययम्॥ तस्मात्त्वं मत्स्यनाथो

14